श्री गणेशाये नमः श्री वाग्मत्यै नमः श्री पशुपति को जये

# वागमातीसहस्रनाम

सानुजं शक्रतापञ्च निहत्य यदुनन्दनः ।
द्वारवत्यां प्रयाणे च सवले सानुजे हरौ ॥१॥
कथं ववाह वागीशा केनैवा पूजिता पुनः ।
पञ्चवक्रश्च तत्क्षत्रं तत्सर्वं वद मे विभो ॥२॥

लोमहर्षण उवाच

प्रश्नमानं घटोद्भूतं स्कन्धोऽब्रवीद्वचो मुदा ।
अभ्यर्च साधु चेत्युक्त्वा सर्वं तस्मै द्विजोत्तमः ॥३॥

स्कन्द उवाच

सर्वदुरितकल्लोलहारिणी पुण्यमालिनी ।
हराङ्कस्थायिनी तस्यै वागीशायै नमोनिशम् ॥४॥
ज्योतिर्लिङ्गे क्षितौ व्यक्ते प्रव्यक्ता वागमती जले ।
तत्क्षेत्रे सरिता व्यक्ते तत्राजग्मुः सुरोत्तमाः ॥५॥
भक्त्याराधितवन्तस्थे पशुपतिं च वाग्मतीं ।
ऋषिपुरः सरा विप्र ब्रह्मविष्णु पुरन्दराः ॥६॥
एकदा दिवसे देवा निषेदितेषु संसदि ।
ददृशुर्वाग्मतीं देवीं ज्योतिलिङ्गाङ्गनिः सृताम् ॥७॥
द्रवीभूतां महादेवी स्वच्छकल्लोलशालिनीम् ।
चित्रात्मनोऽमराः सर्वे तस्थुः किमिति संवदन् ॥८॥
प्रेक्ष्यार्य्यां तादृशां रूपां खिव्याङ्गी प्रणतो मुनी ।
पप्रच्छ पद्मजं कासौ चित्रात्मेति सुभक्तितः ॥९॥
नारदः प्रश्नमानो हि ब्रह्माणं संसदि ध्रुवम् ।

व्याजहार वचो दिव्यं तद्वृत्तान्तं स्वसूनवे ॥१०॥

ब्रह्मो वाच

आद्यशीर्षे स्थिता देवी साद्याननविनिः सृता ।
याद्यास्यनिः सृता विद्या सैवेशाङ्गविनिः सृता ॥११॥
आषाढसितपक्षे च द्वादशीमैत्रयुग्बुधे ।
हरमूर्ध्नि स्थिता गंगा मुखादवततार वै ॥१२॥
तद्भाद्रे श्रवणाक्ते प्राक् सावित्री संभवा विधेः ।
कात्तिके रेवती युक्ते गायत्री प्रभवा तथा ॥१३॥
तन्मानसोद्भवा गंगा तासां योगाद्धि वाग्मती ।
वाग्मती शिवगंगा च ब्रह्मसरस्वती शिवा ॥१४॥
वाग्मती सरितां श्रेष्ठा वाग्मती लोकपावनी ।
वाग्मती ह्रिद्यदात्री च वाग्मती दुःखतारिणी ॥१५॥
स्मरणदोर्निधीः (णात्सन्निधिः) सद्योमुच्यतेदर्शनात्पुनः ।
नेत्रादिजैर्न्नरः पापैः स्पर्शनादंगजैस्तथा ॥१६॥
आचमनाद्वचोद्भूतैः स्नानाज्जन्माज्जिताशुभैः ।
सहस्रनामपाठाद्धि सहस्रजन्मजाशुभै ॥१७॥
कदाचिदैवयोगेन स्नात्वा च वाग्मतीजले ।
तन्मनुस्मरणाद् भक्त्या नरो नारायणो भवेत् ॥१८॥
स्मरणाद्दर्शनं श्रेष्ठं दर्शनात्स्पर्शनं वरं ।
स्पर्शादाचमनं श्रेष्ठं स्नानं पाठः क्रमान्मनुः ॥१९॥
मन्त्ररुपा महादेवी नाभक्तिने प्रकाशयेत् ।
नामानि जलरुपाय भुक्तिमुक्तिप्रदानि च ॥२०॥
रहस्यं सर्वलोकानां कलिप्राप्ते विशेषतः ।

प्रत्यक्षं फलदा सद्यो मुमुक्षूणां च वाग्मती ॥२१॥
देव्याः पानीयरूपाया ध्येयं नाम्नः सहस्रकम् ।
पाठाद्योगाल्लभेन्मोक्षं श्रृणु वक्षामि नारद ॥२२॥
अखिलं प्रथमे विद्या वाग्ग्रूपायै च ह्रिन्मनुम् ।
वागीश्वर्य्यै ह्यखण्डः प्राक् शिरोमन्त्रं प्रयोजयेत् ॥२३॥
सरस्वत्यै पुरो ब्रह्म अत्ये शिखामनुं न्यसेत् ।
शिवगंगा तथा विष्णुन्न्यसेद्धि कवचं मनुं ॥२४॥
वाग्मत्यै च पुरो रुद्रो नेत्रबीजं न्यसेत् पुनः ।
वागीशायै तथा सर्वमस्त्रमन्त्रं न्यसेत्ततः ॥२५॥
सर्वादौ योजयेत्तारमृषिच्छन्दश्च संन्यसेत् ।

ॐ श्री वाग्मत्याः सहस्रनामस्तोत्रस्या गायत्रीच्छन्दो वागीश्वरीदेवता वाग्भवोविजं कामराजः लज्जा कीलकंशिवगंगा बुद्धिः ब्रह्मसरस्वती-शक्तिश्चतुर्वर्ग्गसार्धने विनियोगः २६

लज्जाविजं त्रिधा लिख्य वाग्भवञ्च त्रयस्त्रिधा ।
धर्मवीजं  त्रिधा ध्रीं ध्रीं नेत्रवन्हिसमायुतां ॥ २७॥
लज्जत्रयं गणेशाख्यं ग्रीं ग्रीं ग्रीमिति पूर्व्ववत् ।
शारदायै नमश्चान्ते सिद्धं सारस्वतींमनुं ॥२८॥
सर्वोपरि तथोंकारं जपाद्वागीश्वरो भवेत् ।
प्रणवश्च त्रयं वाणीलज्जाधर्म्मत्रयांगणं ॥२९॥
शारदायै शुभे भार्य्या प्रजपाद्वाक्पतिर्भवेत् ।
करपुटे जलं धृत्वा त्रयोदश्यां निरामिषः ॥३०॥
वाग्मत्याः प्रजपन्यश्च कविराजो भवेद्द्रूतं ।
पुण्डरीकसमासीनां कर्प्पूरेन्दुसमोज्ज्वलां ॥३१॥
त्र्यक्षां स्मितासननां ध्येयां सर्वालंकारशोभनां ।

मालां वरं दधानश्च पुस्तकमभयं करैः ॥३२॥
वग्देवीं वाग्मतीं ध्यायेच्चन्द्रकला द्रवत्सुधा ।
ॐ वाग्मती वाग्भवा वाणी वागीश्वरी वचोवरा ॥३३॥
वागीशा वरदा ब्राह्मी वाग्विभूतिश्च भारती ।
वागीशबल्लभा भाषा गीरुपा वाक्स्वरुपिणी ॥३४॥
वाग्रूपिणी च चैतन्या वाग्वागीश्वरवल्लभा ।
बाचोर्मिमालिनी वाह अर्वाक्पापोर्मिनाशिनी ॥३५॥
वाग्देवेश्वरकण्ठस्था वाग्देवी वाग्मतिश्वरा ।
वाग्भूतार्णप्रवाहा च वागैश्वर्या सरस्वती ॥३६॥
अणिमारुन्धति अर्द्धा अगैश्वर्यावतारिणी ।
असरीरार्द्धमात्रा च अन्नरुपाघहारिणी ॥३७॥
अतिसौम्याच्युताशोका अर्चिताचलवाहिनी ।
अत्युग्राचलसंभिन्ना अच्छिन्नान्छिन्नवाहिनी ॥३८॥
आनन्दिनी स्वभक्तानामात्मान्तस्था च जीविनां ।
आनन्दाऽमृतवर्णाभा आद्यानननसमुद्भवा ॥३९॥
आनन्दोर्म्मिप्रवाहा च आपोदेवी पयोमयी ।
आकाशवाहिनी आर्या आकरा शर्मणोर्मिणां ॥४०॥
इच्छा शक्तिश्च इद्राणी इन्दिरा हरिबल्लभा ।
ईप्सितार्थप्रदा इन्दुरिङ्गितज्ञां शिवप्रिया ॥४१॥
ईश्वरी लोकईशानी ईश्वरमोदकारिणी ।
ईशानी शाङ्करी शान्ताः ईशानमुखसंभवा ॥४२॥
उग्रास्या उग्ररुपा च उग्रवरप्रदा उमा ।

उग्रार्द्धाङ्गनिषण्णा च उग्रशीर्षावतारिणी ॥४३॥
उर्ध्वेश्वरी सदोर्ध्वस्था उनकिल्विषकारिणी ।
उशीरगन्धसुप्रीता उःचवरप्रदाग्रणी ॥४४॥
उरुपा सर्वसंहारे उर्ध्वगतिप्रदर्शिनी ।
उर्ध्वगा उग्रभार्या च उर्ध्वस्थानप्रदायिनी ॥४५॥
ऋग्यजुरथ सामात्मा ऋवर्णा ऋद्धिरुपिणी ।
ऋकारा दितिरुपा च ऋणहन्त्री ऋतुत्सवा ॥४६॥
ऋकारमुखसंभूता ऋवर्णात्मामरप्रसू ।
लृकारसंस्तुताऽनेका लृवर्णसेवितारिहा ॥४७॥
एकाचैकाररुपा च एकारा मदनोत्सवा ।
एकारस्था समैकास्या एकाधारा बहुःश्रिता ॥४८॥
ऐकारवल्लभा ऐन्द्री ऐकारा वामलोचना ।
ऐकारात्मा अनेकाध्वा ऐन्द्रीगणप्रसेविता ॥४९॥
ओंकारस्थातथोंकार ओं कारश्रुतिभूषणा ।
ओं कारवक्त्रसंभूता ओं कारपूर्व्वजप्रिया ॥५०॥
और्द्धरेतोर्चिता और्व्वी और्द्धदेहफलप्रदा ।
औत्तानपादसंप्रीता और्व्वासमोव्वशीप्रीया ॥५१॥
अम्बिकाम्बालिकानन्ता अर्णबाध्वरशीर्षगा ।
अङ्कुशधारिणी अम्बा अन्नपूर्णान्नकारिणी ॥५२॥
अः रुद्रवक्त्रसंजाता अः रुपा शिववल्लभा ।
अः प्रोक्ता चैनसां शास्ता अनङ्गारिविनोदिनी ॥५३॥
कलाधारा कलारुपा कौमुदी कालभैरवी ।

कमला कामिनी काली कुल्लुका कुसुमप्रिा ॥५४॥
कलावती करालास्या कैलासस्था कलानिधिः ।
कामाख्या कुलकान्ता च  कामदा कामचारिणी ॥५५॥
कामधेनुः कृशाङ्गि च कालिन्दी कुञ्जरेश्वरी ।
कान्तिकाया च काञ्चीस्था अलका कूटवाहिनी ॥५६॥
कुलवती कुटिलाङ्गी कोटराक्षी कपालिनी ।
कामेश्वरी च कङ्काली कीर्तिदा कामसुन्दरी ॥५७॥
कामार्त्ता कामरुपा च करुणा कुलदेवता ।
कुलिशाङ्गि कला काष्टा कुमारी कमलेक्षणा ५८॥
कल्याणी कर्च्चिता कान्ती कालरात्री च कौशिकी ।
काम्या अलकनन्दा च कुलधर्म्मप्रकाशिनी ॥५९॥
कलुषघ्नी कृपास्वच्छा कृष्णा कृष्णसमर्चिता ।
कान्तकलोललोलाडचा कृपाकल्लोलशालिनी ॥६०॥
खगेश्वरी खरुपा च खगा खगेन्द्रवाहिनी ।
खवर्णा खङ्गहस्ता च खेचरी खेटकायुधा  ॥६१॥
खाखोदरी खगेन्द्राभा खमणीदुतिशोभना ।
खरदंष्ट्रा खगास्या च खण्डपरशुवल्लभा ॥६२॥
गजास्याम्बा च गुह्येशी गजेन्द्रदशनच्छविः ।
गजचर्म्मावृताजाया गजाननप्रसूतिका ॥६३॥
गौरी गोदावरी गङ्गा गन्धर्वगणसेविता ।
गणनीया गणाध्यक्ष गम्भीरनीरवाहिणी ॥६४॥
गणमाता च गान्धारी गगनमणिभूषणा ।

गोमती गगनेशानी गिरिजा गिरिशप्रिया ॥६५॥
गङ्गार्च्चिता च गायत्री गिरिस्था गिरिसंभवा ।
गण्डकी गरुडस्था च गोकर्णार्चा च गौतमी ॥६६॥
घनभक्तिप्रिया घोरा घनामरप्रसेविता ।
घृताचीसेविता घोरा घोराग्न्याघोरवल्लभा ॥६७॥
घनघनौघघोरास्य घनपापविनाशिनी ।
घनस्वना घना घोरा घोरतरा घनच्छविः ॥६८॥
ङेश्वरी घोरघोषा च घोरकिल्विषघातिनी ।
चञ्चला चारुवाहा च चण्डेश्वरी च चित्तवित् ॥६९॥
प्रचण्डा चण्डरुपा च चामुण्डाः चतुरानना ।
चपला चण्डिका चण्डि षट्चक्रान्तर्न्निवाशिनी ॥७०॥
चारुचारा च चार्व्वाङ्गी चतुरा चारुहासिनी ।
चतुः षष्टिकला चित्रा चित्राङ्गि चारुलोचना ॥७१॥
चारुदेहा चतुबाहुश्चित्रभानुतनुप्रभा ।
चन्द्रभा चन्द्रभागा च चैतन्य चक्रधारिणी ॥७२॥
छन्दोरुपा च्छवर्गाभा प्रोच्छायाच्छन्नविग्रहा ।
छायासञ्छन्दितालोका च्छकाराच्छिन्नविग्रहा ॥७३॥
छत्रसञ्छादिता स्वच्छा लान्छनोर्न्मिपयश्छविः ।
छन्दोमयी श्रुतिञ्छन्दा इच्छात्मा छिन्नसंशया ॥७४॥
जगदानन्दिनी ज्वाला जाम्बत्यर्चिताजिता ।
जगत्पृया जितक्रोधा जगद्धीरा जितेन्द्रिया ॥७५॥
जान्हवी जानकी जाप्या जननी जननन्दिनी ।

जगद्धात्री जगन्मान्या जन्तुजन्मान्तराश्रिता ॥७६॥
जगद्वपुज्जगज्जीवा जातवेदापराजिताः ।
जयमूर्त्तिज्जगमाता जनस्वान्तन्निवासिनी ॥७७॥
जाम्बुनदप्रवाहा च जया च विजयाजया ।
जगज्जिवमयी माता जयन्ती जगदुच्छ्रिता ॥७८॥
जीवेश्वरी जनैश्वर्या जीवेशजनकारिणी ।
झंकेश्वरी झकारात्मा झंकारस्वनवाहिनी ॥७९॥
झर्झरानिपतन्ति च झंकेशार्द्धाङ्गहारिणी ।
झषावतारसुप्रीता झषवर्ग्गप्रसेविता ॥८०॥
झर्झररवसंक्षिप्ता झकाररुपतोषिता ।
अट्टाट्टहासिनी क्रोधात्कोटिकोटीतरङ्गिणी ॥८१॥
तटिनीकरहाटाढय अटवीक्षितिगामिनी ।
हिमकुटतटोद्भूता कूटकटकवाहिनी ॥८२॥
शंखताटङ्क रम्यास्या निधनोद्यतटङ्किनी ।
पीठेश्वरी च पिठार्य्या पीवराम्बु प्रवाहिणी ॥८३॥
डाकिनी डमरुहस्ता डकारेशा डनादिनी ।
डम्भहन्त्रि च भेरुण्डा डामरा डण्डतर्ज्जनी ॥८४॥
ढरुपा ढस्वरा ढात्मा भङ्गाढचा ढण्डकारीणी ।
ढक्कावाद्यास्वनावीचीदृढधारा दृढारवा ॥८५॥
प्रणवेशी प्रणम्यार्य्या नम्या प्रणबसंभवा ।
गरणिङ्गणी तरगाढचा तन्त्रीतरलगामिनी ॥८६॥
तामसी च तमोरुपा तमोगुणा तमः परा ।

तीरवती त्रिरुपा च तुष्टितीब्राद्रिहात्रया ॥८७॥
तीब्रगा तीब्रभङ्गि च तीब्रतोया तपोमयी ।
दुस्तरा दुस्तरत्राता तारेशीताररुपिणी ॥८८
तारिणी ताररुपा च तरलतरतारिणी ।
तपोनिष्ठा त्रिमात्रा च तपस्विनी त्रिलोचना ॥८९॥
त्रिदिवस्था त्रिधारा च तारेश्वरी त्रिविक्रमा ।
त्रिवर्गगामिनी त्रिस्था तत्त्वा त्रिपुरवासिनी ॥९०॥
त्रिलोकात्मा त्रिलोकस्था त्रैलोक्यतीर्थनन्दिनी ।
ताटङ्किनी च तारस्था तारा त्रिशूलधारिणी ॥९१
त्रिमूर्तिस्तरणी तापा त्र्यक्षरात्रिविधाङ्गिनी ।
तीर्थवंन्द्यालसत्तीर्था तीर्थराज्ञी च तीर्थदा ॥९२॥
तिर्थाद्या तीर्थ ज्येष्ठा च तीर्थार्य्या तीर्थवाहिनी ।
तार्क्ष्यस्था तार्क्ष्यवन्ध्या च तार्क्ष्यार्य्या तार्क्ष्यवाहिणी ॥९३॥
स्थानस्था स्थण्डिला स्थीरा स्थाण्वीश्वरी स्थलाश्रिता ।
मथुरा मथुरास्थाता स्थानीस्यस्था स्थला स्थिरा ॥९४॥
ज्येष्ठा च स्थविरा मन्था मैथिली प्रमथाधिपा ।
दुष्कृतघ्नी स्पृहादोग्धृ देवमाता दधिप्रभा ॥९५॥
देवता देवमूर्तिश्च देवदेवप्रियोत्तम ।
देवदूती च दीप्तास्या देवकी दैत्यनाशिनी ॥९६॥
द्वीपिचर्म्मावृता दाक्ष्या दक्षयज्ञप्रमाथिनी ।
दारिद्रनाशिनी दान्ता दाक्षायणी च दुर्ग्गहा ॥९७॥
दावाग्निदलना दक्षा दिग्वस्त्रा द्वादशानना ।

दशभुजा च दक्षिण्या दण्डिनी दण्डवत्पृया ॥९८॥
दुरितघ्नी दया दुर्गा दुराधर्षा दिगम्बरी ।
दाहाप्रशमनी दीप्ता दुराराध्य च दारुणा ॥९९॥
अष्टादशभुजा चण्डा द्विपत्रवासिनी दया ।
दक्षकन्या द्रवा दिव्या दिव्यरुपा दरीस्तवा ॥१००॥
दिव्यार्चिता च दिव्याङ्गी देवसैन्या सुदीप्तिका ।
दायिनी द्रव्यरुपा च दानवघ्नी दयाकरा ॥१०१॥
दुर्ग्गरुपा दुराराध्या दुर्जया दुरतिक्रमा ।
देवेश्वरी दयाशीला दिव्यमोक्षप्रदायिनी ॥१०२॥
धीरा धीरप्रवाहा च धाराप्रवाहिणी सुधा ।
धरित्री धारिणी धात्री धरणीधर्प्रवाहिणी ॥१०३॥
धन्या धान्यधरा धीरा धारणा धरणी धरा ।
धराधराननना धैर्य्या धर्म्मात्मा धर्मरुपिणी ॥१०४॥
धीरुपा धिषणा धात्री धूम्राक्षा धर्मविग्रहा ।
ध्यानगम्या निशि धेया ध्यानानना धराश्रिता १०५॥
ध्यानरुपा बुधाध्याता ध्यानस्था ध्यानरुपिणी ।
ध्यानातीतामरध्याता ध्यातव्या ध्यानतत्परा ॥१०६॥
ध्यानेक्षणा धिया धेया ध्यानास्या ध्यानसंश्रिता ।
धीरध्याता धराधाना धाराध्येया विधायिनी ॥१०७॥
नन्दिनी च नीराधारा निस्कला निर्ग्गुणा नदी ।
नीलघनस्वना नग्ना नानाजातिनिवासिनी ॥१०८॥
नागोपवीतिनी नाटचानन्दा नृमुण्डधारिणी ।

नीलघनाभदेहा च निर्द्वन्द्वा नागनायिका ॥१०९॥
नागेन्द्रदन्तसंकाशा नरकनाशिनी नया ।
निर्द्भया निर्द्भरा निष्ठा नारायणी निरञ्जना ॥११०॥
निष्ठुरा च नराकारा नारसिंही च नोपमा ।
निशीथिनी निशाहन्त्रि नानादुःखनिवारिणी ॥१११॥
निर्म्मदा करतोया च निकलङ्का च नाशिनी ।
शतद्रुसिन्धुसंवाहा नित्यानन्दविधायिनी ॥११२॥
त्रिनयना नृसिंहार्य्या नानाकारप्रवाहिणी ।
पापघ्नी पाविनी पद्मा पवित्रा पद्मपूजिता ॥११३॥
प्रज्ञारुपा प्रचण्डा च पद्मस्था पद्मसंभवा ।
पद्माक्षी पद्मिनी प्रीता प्रकटवासिनी परा ॥११४॥
प्रीतिभक्ता च पश्यन्ति परंब्रह्मावतारिणी ।
प्रभावती परात्मा च पद्मजा परमेश्वरी ॥११५॥
पातकघ्नी पराशक्तिः पञ्चमी पञ्चमारुता ।
पञ्चात्मा पञ्चतत्वा च पञ्चत्वस्था परापरा ॥११६॥
पञ्चपीठेश्वरी पूर्णा पूरका पञ्चमीपृया ।
पूर्णिमा पूर्णरुपा च पूर्णेश्वरी परात्परा ॥११७॥
फणीन्द्रभूषणा फेरुः स्फटिकाभा प्रवाहिणी ।
स्फीटा स्फोटप्रवाहाच स्नातकस्फोटनाशिनी ॥११८॥
फणिहारा फलाढचार्या स्फटिकार्णा फलप्रदा ।
फेरुस्था फेरुरावा च फेत्कारिणी तथा प्रभा ॥११९॥
वैष्णवी वामरुपा च वामेश्वरी वरप्रदा ।

वामस्था वाहिनी वामा वामेशा वामलोचना ॥१२०॥
वरेण्या वरदा वाला वरार्य्या वरदायिनी ।
विमला च विशालाक्षि विश्वाक्षि विन्दुवासिनी ॥१२१॥
विश्वात्मा च विरुपाक्षि विभवा विध्यवासिनी ।
बोधिनी वीरजा वीरा विश्वयोनिश्च वत्सला ॥१२२॥
विश्वा सर्व्वसुधा वीजा विशालामृतवाहिनी ।
विद्याधरी च विद्यात्मा वैखरी वामकेश्वरी ॥१२३॥
वेदरुपा च वेदान्ता वेदाङ्गवेदवल्लभा ।
वाराही वासवी वाणी वाराणसीनिवासिनी ॥१२४॥
भवानी भववन्द्या च भूमिस्था भूमिभूषणा ।
भागीरथी भवाराध्य भवमाता भवेश्वरी ॥१२५॥
भयापहा भवानन्दा भयङ्कर् भयेनासिनी ।
प्रभादेवी भगेशी च भाविनी भवनाशिनी ॥१२६॥
भक्तिगम्या च भीतिघ्नी भास्करी भुवनेश्वरी ।
भक्तिवरप्रदा भव्या भ्रामरी भगमालिनी ॥१२७॥
भक्तितुष्टा च भेरुण्डा भुक्तिदा भवतोषिणी ।
भावना भुवनेशी च भक्तीशा भवलोचना ॥१२८॥
भस्वद्देहा च भव्यास्या भावती भवरञ्जनी ।
भूभूषणा च भूतस्था भूमिभूषणवाहिणी ॥१२९॥
भगवती भवात्मा च भवदुःखप्रभञ्जनी ।
भीमरुपा भवभ्रान्ती भव्या भव्यार्च्चिताननना ॥१३०॥
भीमादेवी शुभा भद्रा भीमा भीमनिनादिनी ।

भूतेशी भूतधात्री च भूतस्था भूतभाविनी ॥१३१॥
माहेश्वरी माहामाया मुञ्जवदद्रिसङ्गमा ।
मशेखरी महामारी मान्या महेशनन्दिनी ॥१३२॥
महाज्योतिर्महामेधा मायापुरीनिवासिनी ।
मातङ्गिनी मनोरुपा महाभूता च मध्यमा ॥१३३॥
मणिपूरकमध्यस्था मोहिनी विश्वमोहिनी ।
महाधृतिर्म्माहाकाली मंदिरा मन्दिताननना ॥ १३४॥
महामतिर्महासूक्ष्मा मधुमती महोदरी ।
मेनकागर्भजा मास्था मङ्गला च सुमङ्गला ॥ १३५॥
मन्दहासा महादंष्ट्रा मालिका  च महोमखा ।
मदालसा मनोज्ञा च मनस्विनी मनोहरा ॥ १३६॥
मन्दाकिनी महाभद्रा मोक्षदात्री च माधवी ।
मातरा मन्त्ररुपा च मन्त्रमाता मणिप्रभा ॥ १३७॥
मुन्द्राप्रिया च मेरुस्था मन्त्रात्मिका मनोरमा ।
मृगेन्द्राद्रिप्रवाहा च महेशमुखसंभवा ॥१३८॥
मणिमतिर्म्माहावेगा मणिमुकुटसंभवा ।
याज्ञेया यमुना ज्येष्ठा यज्ञमाता यशस्विनी ॥१३९॥
यज्ञाङ्गी यामरुपा च यज्ञरुपा यशोमयी ।
यज्ञप्रिया च यज्ञेशा यज्ञभोत्री यशः पृया ॥१४०॥
यशोदागर्भसञ्जाता यशःपूर्णा यशोबला ।
यादःप्रसेविता याम्या यातुधानप्रपूजिता ॥१४१॥
योगसारा युगाद्या च योगेश्वरी अयोनिजा ।

योगीशा योगरुपा च योगीन्द्रहृदयाश्रिता ॥१४२॥
योगिनीसेविता योग्या योगीश्वरा युगस्थिता ।
योगीश्वरास्यसंभूता योगसिद्धा यशोमयी ॥१४३॥
योगोद्भवा सुयोगार्य्या योगेन जलवाहिनी ।
रसोत्तमप्रवाहा च रुद्रहृद्रमणा रसा ॥१४४॥
रावणभूतिदा रम्भा राजराजेश्वरीवरा ।
रसवाहा च रम्भोरु रसभोक्री रसपृया ॥१४५॥
रागपृया रसज्ञा च रामा राधावतारिणी ।
रमणी राधिकाराध्य राज्यदा राज्यराजिता ॥१४६॥
राकिणी राज्यभोक्त्री च रौद्रीनामवरप्रदा ।
रोहिणी रक्तपद्मस्था रतिज्ञा ऋद्धिरुपिणी ॥१४७॥
रुद्रप्रिया च रुद्री च रथस्था रथगामिनी ।
रत्नाङ्गी रक्तवासा च रक्ताक्षी रक्तदन्तिका ॥१४८॥
रत्नगृहा च रत्नस्था रत्नपद्माश्रिता रसा ।
लम्बोदरप्रसूता च मृगलाञ्छनशेखरा ॥१४९॥
लम्बिका नलिनोल्लासा लाकिनी ललितालका ।
ललना ललजिव्हा च ललिता लोहिताङ्गिनी ॥१५०॥
लम्बोदरी सुलीलागा लोलकल्लोलमालिनी ।
लक्ष्मील्र्लक्ष्मीप्रदा लक्ष्मा लक्षालक्षतरङ्गिणी ॥१५१॥
लक्ष्मीरुपा च लक्ष्मीस्था लक्ष्मीलक्ष्मावधिश्रिता ।
वेणुर्वंशप्रिया ब्राह्मी वल्लकीवाससः प्रिया ॥१५२॥
बालीशा बालिका बाला ब्रह्मस्वच्छोर्म्मिमालिनी ।

ब्रह्मस्था ब्रह्मरुपा च ब्रह्मेशी ब्रह्मपूजिता ॥१५३॥
ब्रह्मातीता परं ब्राह्मी ब्रह्मेशाच्युतवन्दिता ।
शिवेश्वरी शिवावाहो शाम्भकरी शिवप्रिया ॥१५४॥
शर्वेश्वरी च शर्व्वाणी शान्ता शान्तप्रवाहिणी ।
शमना शक्तिरुपा च शार्ङ्गिणी सर्वमङ्गला ॥१५५॥
शतरुद्रा शची शीता  शीला शीलप्रदा शुभा ।
शीलरुपा सुशीलस्था श्रीरुपा श्रीकरी शिवा ॥१५६॥
श्रीमयी श्रीनीवासा च श्रीमती श्रीधरार्चिता ।
श्रद्धाप्रिया सदाश्रद्धा श्रद्धात्मा च श्रुतिप्रिया ॥१५७॥
श्रूतिप्रज्ञा शशाङ्काभा श्रुतिरुपा शुचिस्मिता ।
श्रुतिनी श्रुतिनेत्रा च श्रुतिज्ञा श्रुतिपूजिता ॥१५८॥
षट्पत्रपद्ममध्यस्था षचक्राधारसंश्रिता ।
चतु:षष्टिकलोपेता षष्ठश्वरी षडङ्गिनी ॥१५९॥
षडास्यजननी षष्ठी षडानना षरुपिणी ।
षोडशी षोडशाधारा षोडशारनिषङ्गिणी ॥१६०॥
साक्षात्सारतरा सारा सत्वस्था सर्व्ववन्दिनी ।
सात्विकी सत्वरुपा च सर्वसत्वनिवासिनी ॥१६१॥
संसारसारहा स्वाहा सुभङ्गा साररुपिणी ।
संवर्त्तन्ता निमेषादिसंवत्सरावतारिणी  ॥१६२॥
सहस्रास्य सहस्राक्षा सावित्री सारदेश्वरी ।
सर्व्वेश्वरी च सत्यात्मा सर्वविद्या च साकिनी ॥१६३॥
स्मृतिमयी  च सूर्यात्मा सर्व्ववणान्तसारिणी ।

सर्व्वेंद्रियाश्रिता सूक्ष्मा सर्वेंद्रियाधिशी वरा ॥१६४॥
सिद्धात्मा सूक्ष्मरुपांशा सूक्ष्मस्था सोमभूषणा ।
संग्रामजयदा साध्वी सृष्टिस्थितिविनाशिनी ॥१६५॥
सर्व्वेशा सर्व्वरोगघ्नी सर्वग्रहविनाशिनी ।
सदसद्रूपिणी सत्ता स्वस्तिरुपा सरस्वती ॥१६६॥
हृदिनी हरवाग्जाता हरहासास्यनिसृःता ।
ह्रित्पद्मवासिनी ह्रिष्टा ग्रहराक्षसनिग्रहा ॥१६७॥
हंसस्था हंसरुपा च हंसमूर्त्तिर्हरप्रिया ।
हिंगुला हंसदेवी च हाकिनी हरवल्लभा ॥१६८॥
हंसेश्वरी हकारात्मा हंसीगतिश्च हासिनी ।
हरवक्त्रोद्‌भवा हंसी हरिवन्द्या हरिप्रिया ॥१६९॥
हेमाभा हिमवत्पुत्री हिमकोटीतपस्विनी ।
हिमाद्रितुङ्गसानोर्हि पतन्ति हिमशीकरा ॥१७०॥
क्षौणीश्वरी क्षमारुपा क्षणदेश्वरशेखरा ।
क्षीणक्षेमङ्करी साक्षात्क्षोभिणी क्षितिवाहिनी ॥१७१॥
क्षामोदरी क्षमा क्षीणा यक्षेश्वरी सुदक्षिणा ।
क्षेमंकरी क्षणाभाङ्गी क्षौमाम्बरी क्षणप्रभा ॥१७२॥
क्षत्रज्ञा क्षेमदा क्षीणा अक्षयाक्षेयभृङ्गिणी ।
क्षेत्रस्था क्षेत्रदेहा च मोक्षदा क्षीप्रवाहिणी ॥१७३॥
इत्येतत्कथितं नाम्ना सहस्रं सुरदुर्लभम् ।
पुण्यात्पुण्यतरन्नाम वाग्मत्या नारदाञ्जसा ॥१७४॥
वर्णितं त्रिदशैः पूर्व्वं ब्रह्मविष्णुमहेश्वरैः ।

सुधामयानि नामानि वाग्मत्या महिमानि च ॥१७५॥
सावधानपरो विप्र पाठकानां विशेषतः ।
दूरस्थानामशक्तानां वक्ष्यामि तज्जलाल्पवं ॥१७६॥
एकधा पाठकस्तस्यां स्नानोदभवफलं लभेत् ।
द्विधा च पाठकस्नाता मनोवान्छाफलं लभेत् ॥१७७॥
त्रिधा प्रपठनात्स्नाता भोग्यार्थी भोग्येमाप्नुयात् ।
चतुर्धा पठनात्सौख्यं पञ्चधा धनमाप्नुयात् ॥१७८॥
षड्धा पाठाद्धि कीर्त्तिः स्यात्प्रभुत्वं सप्तधा तथा ।
अष्टधा पठनात्सद्य ऐश्वर्यत्वं फलं लभेत् ॥१७९॥
नवधा चैव वाक्सिद्धि लोकमानपुरःसरां ।
दशधा च दिगीशत्वं एकादशाद्धरात्मकं ॥१८०॥
पूर्वेद्युः संयमस्तस्यां स्नानं कुर्यात्परेद्युतः ।
अन्योऽशक्तोऽपरो धीमान् यथोक्तं तत्फलं लभेत् ॥१८१॥
दर्भपाणिः सुसंकल्पी यथेप्सितफलात्मकः ।
वाग्मतीजीवने स्नात्वा तदभिधानकं पठेत् ॥१८२॥
एकधा पाठकः पापैः सांवत्सरैः प्रमुच्यते ।
एवं दशोत्तरं वृद्धि पाठात्किल्विषनाशनम् ॥१८३॥
अशक्तानां प्रभूतानां भक्त्या तच्छ्रवणाफलं ।
अन्याभिः सङ्गमे स्नात्वा वाग्मत्यां स्याद्दशोत्तरं ॥१८४॥
सङ्गमे विष्णुपद्याश्च शतोत्तरं फलं लभेत् ।
मणिमतीसमाजे च सहस्रगुणितं लभेत् ॥ १८५॥
गङ्गासमाजके स्नात्वा वाग्मत्यामयुताधिकम् ।

गायत्री चैव सावित्री बाग्मती पाठकोऽपरा: ॥१८६॥
तासां समाजके स्नात्वा नियुतं फलमाप्नुयात् ।
पूर्वजन्मविपाकैश्च विविधरोगसंकुल: ॥१८७॥
वाग्मत्यां स्नातक: पाठात्तत्तदोगैर्जिमुच्यते ।
तस्या स्नाता सकृत्पाठान्मुच्यतेकृमिव ध्वजै ॥१८८॥
तस्यां स्नानद् द्विधापाठात्पक्षिहत्यां व्यपोहति ।
त्रिवारपाठत: स्नातुम्मृगवधोद्भवन्तथा ॥१८९॥
चतुर्धापाठक: स्नात्वा अश्वहत्या व्यपोहति ।
पञ्चधा पाठक: स्नाता नरहत्यां व्यपोहति ॥१९०॥
षड्धा पाठद्धि तत्स्नातु: स्त्रीहत्या प्रविनस्यति ।
सप्तधा वालहत्या च स्नातुतस्यां विनस्यति ॥१९१॥
मिथ्योक्तमष्टधा पाठादत्युत्कटं व्यपोहति ।
नवधा पाठत: स्नातुर्गोवधजो विनस्यति ॥ १९२॥
दशधा पठत: स्नातुर्ब्रह्मिहत्यां व्यपोहति ।
स्वर्णस्तेयसुरापानमगम्यागमनोद्भवं ॥१९३॥
अभक्षभक्षजं तस्यां स्नाता पाठाद्विसर्ज्जति ।
कदाचिद्दैवयोगेन हरिवासे गीरौ ब्रजन् ॥ १९४॥
यत्र चासीद्रमातीर्थं सावित्री बाग्मति तथा ।
गायत्री संगमे धीमान स्नात्वा नाम पठिष्यति ॥१९५॥
कोटिजन्मार्ज्जितं पापं त्यक्त्वा याति परां गतिं ।
गिर्यारोहणमात्रेण अश्वमेधफलं लभेत् ॥१९६॥
संक्रान्त्यां पूर्णिमायाञ्च चतुर्द्दश्यां तथा कुहौ ।

द्वादश्यां च तृतीयायामष्टम्यां योगसंयुगे ॥१९७॥
नाम्नां सहस्रकं पाठाद्दशोत्तरफलं लभेत् ।
आतुरो मुच्यते रोगैः कुष्टार्तः कुष्टकैद्रुतं ॥१९८॥
ज्वरार्तो मुच्यते रुग्भिः श्रुत्वा सहस्रनामकं ।
पौढरोगप्रयुक्तोपि प्राणकण्ठाश्रिते यदा ॥१९९॥
नाम्नां सहस्रकं श्रुत्वा परात्परां गतिं लभेत् ।
ग्रहाः प्रशमनं यान्ति क्रुरा नाम्नां प्रपाठतः ॥२००॥
विद्यार्थी लभते विद्यां पुत्रार्थी लभते सुतं ।
गुर्बिणी सूयते पुत्रमाकर्ण्य नामपाठतः ॥२०१॥
कुष्माण्डा राक्षसाः क्रूरा भूताः प्रेताश्च डाकिनी ।
नाम्नां पाठकमालोक्य पलायन्तेऽपभृत्यवः ॥२०२॥
सर्वयज्ञोद्भवं पुण्यं व्रतानां चैव यत्फलं ।
धर्माणामुपवासानां सर्वदानोद्भवं फलं ॥२०३॥
सर्व्वतीर्थोद्भवं पुण्यं प्रतिमादर्शनस्य च ।
तत्पुण्यं गुणितं लक्षं स्नात्वा च वाग्मतीजले ॥२०४॥
कोटिकन्या भूमिदान गोदान फलप्राप्तये ॥
सहस्रनामपाठाद्वै मोक्षं परात्परं लभेत् ॥२०५॥
वाग्मत्या सलिले स्वकीयचणौ संस्पृश्य रोगार्ज्जितः ,
प्रणैः कण्ठगतोपि मापरजनो मुञ्चत्य सूस्तत्तटे ।
सोन्ते योगसुगम्यमानपदवीं प्रप्नोति ह्रिद्यं शिव ,
वाञ्छन्ति त्रिदशा हि तादृशगतिं धीरा जनाःकिं पुनः ॥२०६॥
इति श्रीस्कन्दपुराणे हिमवत्खण्डे ब्रह्मनारदसंवादे
वाग्मतीसहस्रनाम चतुरशीत्यधिकशततमोऽध्याये ॥१८४॥